[ ९,१३३ ] । विष्णुः [ १९,२७ ] । यत्र क्वचनोत्पादितश्च द्वादश इति । याज्ञवल्क्यः [ २,१३२ ] । पिण्डदोंशहरश्चैषां पूर्वाभावे परः पर इति । मनुः [ ९,१८४ ] । श्रेयसः श्रेयसोभावे पापीयान्रिक्थमर्हतीति । नारदः [ १३,४९ ]। क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने । ज्यायसो ज्यायसोभावे जघन्यस्तदवाप्नुयादिति ॥ देवलः । सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः। औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति ॥ तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः । शेषास्तमुपजीवेयुर्ग्रासाच्छादनसंभृता इति ॥ मनुः [ ९,१६४ ] । षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसो विभजन्दायं पित्र्यं पञ्चममेव वेति ॥ बृहस्पतिः । क्षेत्रजाद्याः सुतास्त्वन्ये पञ्चषट्सप्तभागिन इति ॥ हारीतः । विभजिष्यमाण एकविंशं कानीनाय दद्याद्विंशं पौनर्भवायैकोनविंशं द्व्यामुष्यायणायाष्टादशं क्षेत्रजाय सप्तदश पुत्रिकापुत्रायेतरानौरसायेति । वसिष्ठः । पुत्रं प्रतिग्रहीष्यन्निति प्रक्रम्य तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागिति [ व० ध० शा० १५,९ ] । एवमेतेषु शास्त्रेषु विद्यमानेषु पुत्रेषु यदाचार्येण पूर्वमुक्तं तेषां कर्मभिः संबन्धो दायेनाव्यतिक्रमश्चेति [१३,१-२] तद्धर्मपत्नीजे पुत्रे सति क्षेत्रजादीनां समांशहरत्वप्रतिषेधपरं वेदितव्यम् ॥ अथाविभाज्यम् ॥ अत्र मनुः [ ९,२०८ ] । अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम् । स्वयमीहितलब्धं तन्नाकामो दातुमर्हतीति ॥ कात्यायनः । नाविद्यानां तु वैद्येन देयं विद्याधनात्क्वचित् । समविद्याधिकानां तु देयं वैद्येन तद्धनम् ॥ परभक्तप्रदानेन प्राप्तविद्यो यदान्यतः । तया प्राप्तं तु विधिना विद्याप्राप्तं तदुच्यत इति ॥ व्यासः । पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत् । तस्य तन्नापहर्तव्यं शौर्यभार्याधनं तथेति ॥ याज्ञवल्क्यः [ २,११९ ] । क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत यः । दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ [ मनुः ९,२०० ] । पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् । न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥ व्यासः । साधारणं समाश्रित्य यत्किंचिद्वाहनायुधम् । शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥ तस्य भागद्वयं देयं शेषास्तु समभागिन इति ॥ इति पुत्रदायविभागः । तदभावे तु मृतस्य यः प्रत्यासन्नः सपिण्डः स दायं हरेतेति वक्ष्यमाणेन संबन्धः । लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । सप्तमः पिण्डदस्तेषां

स्तेषां सापिण्ड्यं साप्तपौरुषमिति सपिण्डलक्षणम् । तेषु यो यः प्रत्यासन्नः स गृह्णीयादिति ॥ भार्या तु रिक्थग्राहिणः सपिण्डा रक्षेयुरित्याचार्यपक्षः । श्रूयते हि [ तैत्ति° सं° ६,५,८,२ ] । तस्मात्स्त्रियो निरिन्द्रिया अदायादीरिति ॥ मनुरपि । निरिन्द्रया अदायादाः स्त्रियो नित्यमिति स्थितिरिति । अत्र सपिण्डाद्यभावे बृहस्पतिः । अन्यत्र ब्राह्मणात्किंतु राजा धर्मपरायणः । तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥ अन्नार्थं तण्डुलप्रस्थमपराह्णे तु सेन्धनम् । वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥ एतावदेव साध्वीनां चोदितं विधवाशनम् । वसनस्याशनस्यैव तथैव रजकस्य च । धनं व्यपोह्य यच्छिष्टं दायादानां प्रकल्पयेत् । धूमावसानिकं श्राव्यं संध्यायां स्नानतत्परां(?)[2] । वसनाशनवासांसि विगणय्य धवे मृत इति ॥ व्यासः । द्विसाहस्रः परो दायः स्त्रियै देयो धनस्य तु । यच्च भर्त्रा धनं दत्तं यथाकाममवाप्नुयात् ॥ पणानां द्वे सहस्रे तु यस्य परिमाणं स द्विसाहस्रः । एष एव परो दायः स्त्रियो नाधिक इति ॥ एतत्प्रभूते धने ज्ञातयश्च न रक्षेयुरिति शङ्कायाम् । पत्नी दुहितरश्चैवेत्यादि [ या° ध° शा° २,१३५ ] । यानि पत्न्या दायप्राप्तिपराणि तान्यपि एवमेव द्रष्टव्यानि ॥ गौतमस्तु पुत्राभावे पत्न्याः सपिण्डादिभिः समांशग्रहणमाह [ २८,२१ ] । पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन् स्त्री चानपत्यस्येति । अस्यार्थः । अनपत्यस्य रिक्थं पिण्डसंबन्धाः सपिण्डाः प्रत्यासन्नक्रमेण भजेरन् । तदभावे गोत्रसंबन्धाः सगोत्राः । तदभाव ऋषिसंबन्धाः समानप्रवराः स्त्री च पत्नी च । अत्र स्त्रिया सह सपिण्डा भजेरन् । तदा स्त्री सह तैरेकमंशं गृह्णीयात् । ततश्च पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेदिति [ या° ध° शा° २,१२३ ] । सपिण्डादिभिः सह ग्रहणमुक्तमिति वयमप्येतमेव पक्षं रोचयामहे[3] ॥ अत्र पितरि भ्रातरि च सोदर्ये जीवति सोदर्यो भ्राता गृह्णीयादित्येके । तथा च शङ्खः । अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यम् । तदभावे मातापितरौ लभेयाताम् । पत्नी वा ज्येष्ठेति ॥ देवलः । ततो दायमपुत्रस्य विभजेरन्सहोदराः । कुल्या दुहितरो वापि ध्रियमाणः पितापि च ॥ सवर्णा भ्रातरो माता भार्या चेति यथाक्रममिति ॥ याज्ञवल्क्यः

---

[1] Compare Manu ix, 18.

[2] माह्यं सभायां स्नानतः पुरा G. U;[1]—शाण्यं सभाग्यां स्नानतः पुरा G.U.[2].

[3] The passage तदापत्नी सह तै°—रोचयामहे is found in G. U.[1] alone.

[ २,१३८-९ ] । संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः । दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च ॥ आन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् । असंसृष्टयपि चादद्यात्संसृष्टी नान्यमातृजः ॥ अत्र सोदर्य इति विशेषवचनात्पत्नी दुहितरश्चेत्यत्र भ्रातृग्रहणं भिन्नोदरविषयमपि प्रत्यासत्त्यतिशयात्पितैवेत्याचार्यस्य पक्षः । तदभावे भ्राता सोदर्यः । तदभावे तत्पुत्राः । तदभावे भिन्नोदराः तदभावे पितृव्य इत्यादि द्रष्टव्यम् ॥ मात्रादयोपि स्त्रियो जीवनमात्रं लभेरन्निति ॥

३. तदभावे सपिण्डाभाव आचार्यो दायं हरेत् । तस्याप्यभावेन्तेवासी हरेत् । हृत्वा तदर्थं धर्मकृत्येषु तटाकखननादिषूपयोजयेत् । वाशब्दात्स्वयं वोपयुञ्जीत ॥

४. दुहिता वा दायं हरेत् । पुत्राभाव इत्येके । अनन्तरोक्तविषय इत्यन्ये ॥

५. सर्वग्रहणाद्बन्धूनां सगोत्राणां चाप्यभावे ॥

६. एक एवं मन्यन्ते ज्येष्ठ एव दायहर इतरे तमुपजीवेयुः ॥ सोपि तान्पितेव परिपालयेत् । तथा च गौतमः [ २८,३ ] सर्वं वा पूर्वजस्येतरान्बिभृयात्पितृवदिति ॥

७. क्वचिद्देशे सुवर्णादि ज्येष्ठस्य भाग इत्याह । भूमौ जातं भौमं धान्यं कृष्णं माषादि । कृष्णायसमित्यन्ये ॥

८. रथः पितुरंशो गृहे च यत्परीभाण्डमुपकरणं पीठादि तदपि ।

९. भार्यायास्तद्भृतोलंकारोंशो ज्ञातिभ्यः पित्रादिभ्यश्च यल्लब्धं धनं तच्चेत्येके ॥

१०. ज्येष्ठो दायाद इति ( सूत्र० ६ ) यदुक्तं तच्छास्त्रैर्विप्रतिषिद्धं विरुद्धम् । येन विरुद्धं तद्दर्शयति ॥

११. पुत्रेभ्य इति बहुवचननिर्देशादविशेषेण श्रवणमत्र चोद्यम् ॥

१२. अथापि ननु चेत्यर्थे । ज्येष्ठं पुत्रं धनेन निरवसाययन्ति पृथक्कुर्वन्तीत्येकवच्छ्रूयते । यथैक एव ज्येष्ठो दायादस्तदनुरूपमपि श्रूयत इति परिहरति ॥

१३. अथापीति परिहारोपक्रमे । पशूनां मध्येजाश्चावयश्च जातिभेदेपि सह चरन्ति । रेभा शोभा । इह तु तद्वत्युपचारः । स्नातकस्य मुखं कुण्डलादिना शोभते । इवशब्दो वाक्यालंकारे । श्रोत्रियस्य स्त्रीकामतमस्व-

माचार्यकुले चिरकालं ब्रह्मचारिवासात् । यथैतानि वाक्यानि दृष्टार्थमात्रमनुवदन्ति न किंचिद्विधति तथा तस्माज्ज्येष्ठं पुत्रमित्यादिकमपीति न्यायविद आहुः । न च केवलमयमेवानुवादः । किं तर्हि मनुः पुत्रेभ्य इत्ययमप्यनुवाद एव ॥

१४. हिशब्दो हेतौ । यस्मादेतावनुवादौ न कस्यचिद्विधायकौ तस्माद्ये धर्मयुक्ताः पुत्राः सर्व एव ते भागिनः ॥

१५. यस्तु ज्येष्ठोऽप्यधर्मेण द्रव्याणि प्रतिपादयति विनियुङ्क्ते तमभागं कुर्वीत जीवद्विभागेऽपि तस्मै भागं न दद्यात् । ऊर्ध्वं विभागेऽपि भ्रातरः । अपिशब्दात्किमुतान्यमिति ज्येष्ठस्य प्राधान्यं व्याप्यते ॥

१६–१७. जीवन्पुत्रेभ्य इत्यनेन भार्याया भागो न दर्शितः[2] । तत्र कारणमाह ॥ जायापत्योरिति ॥ स्पष्टम् ॥ तस्मात् ॥ पाणीत्यादि ॥ कर्मार्थं द्रव्यं जायायाश्च न पृथक् कर्मस्वधिकारः । किंतु सहभावेन यस्त्वया धर्मश्च कर्तव्यः सोनया सहेति वचनात् । तत्र किं पृथग्द्रव्येणेति ॥

१८–१९. पुण्यफलेषु स्वर्गादिष्वपि तथा सहत्वमेव । दिवि ज्योतिरजरमारभेतामित्यादिभ्यो मन्त्रलिङ्गेभ्यः । द्रव्यपरिग्रहेषु द्रव्यार्जनेष्वपि तथा सहत्वमेव । तत्र पतिरर्जयति जाया गृहे निर्वहतीति योगक्षेमावुभयायत्ताविति द्रव्यपरिग्रहेऽपि सहत्वम् । तदेवोपपादयति ॥

२०. हि यस्माद्भर्तुः प्रवासे सति नैमित्तिके दाने छिन्दत्पाणि दद्यादित्यादिके दाने कृते भार्याया न स्तेयमुपदिशन्ति धर्मज्ञाः । यदि भर्तुरेव द्रव्यं स्यादेव स्तेयम् । नैमित्तिक इति वचनाद्विषयान्तरे स्तेयं भवत्येव । एतदेव द्रव्यसाधारण्येऽपि दंपत्योर्वैषम्यं यत्पतिर्यथेष्टं विनियुङ्क्ते जाया त्वेतावदेवेति । न च पत्युः स्वयमर्जितस्य विनियोगे जायाया अनुमत्यपेक्षा स्वतन्त्रत्वात् । स्वतन्त्रो ह्यसौ यथा राजा राष्ट्रे । अत एव भार्यायाः स्तेयशङ्का न भर्तुः ॥

## PAṬALA VI., KAṆḌIKÂ 15.

१. ज्येष्ठो दायाद इत्यादिकं शास्त्रविप्रतिषेधादप्रमाणमित्युक्तम् । एतेन देशधर्माः कुलधर्माश्च व्याख्याताः । शास्त्रविप्रतिषिद्धा मातुलसुतापरिणयादयोऽप्रमाणं विपरीताः प्रमाणमिति ॥

---

[1] G. U.[1] adds: स्वर्गादिष्वपि सहत्वमेव दिवि ज्योतिरजरमारभेतेत्यादि द्रव्यपरिग्रहेषु विनियुङ्क्ते ।
[2] इत्यनेन दंपत्योः सहभावो दर्शितः । G. U.[1]—

३. मातुर्योनिसंबन्धा मातुलादयः पितुश्चा सप्तमात्पुरुषात्संबन्धाः स-पिण्डाः । ……… ॥

४. ये च तान्बालान्मृतान्हरन्ति निर्हरन्ति तेऽप्युदकोपस्पर्शनं कुर्युरिति । एवमाचार्यस्य पक्षः ॥

५. भार्या पत्नी । परमगुरव आचार्यमातापितरः । संस्था मरणम् । भार्यायां संस्थितायां परमगुरूणां च संस्थायां सत्यां न केवलमुदकोपस्पर्शनम् । किं तर्हि । अपरेद्युरा तस्मात्कालादभोजनम् ॥

७.–९. प्रकीर्य केशान्पांसूनावपन्ति । एकवाससः । दक्षिणामुखा दक्षिणां दिशं निरीक्षमाणाः । सकृदुन्मज्योदकादुत्तीर्य तीर उपविशन्ति दक्षिणामुखा एव । एवं त्रिरेवमुक्तेन प्रकारेण त्रिरुपमज्योपविशेयुः । ततस्तत्प्रत्ययं तेषां मृतानां भार्यादीनां यथा प्रत्ययो भवति मह्यमुदकं दत्तमिति तथोदकमुत्सिञ्चन्ति । त्रिरित्यनुवृत्तेः । आचारादिभ्यत्वाद्बोभाभ्यां हस्ताभ्यां तिलमिश्रम् । एकोत्तरवृद्धिः । भरद्वाजगोत्राय यज्ञशर्मण एतत्तिलोदकं ददामीति प्रयोगः । उत्सिच्याप्रतीक्षाः पृष्ठतोनिरीक्षमाणा ग्राममेत्य गृहं प्रविश्य । अनेन बहिरिदं कर्मेति गम्यते । यत्स्त्रियः कर्तव्यमाहुरग्न्याज्यस्पर्शनगवालम्भनादीनि । एतत्प्रथमेऽहनि द्वितीयादिष्वहरहरञ्जलिनैकोत्तरवृद्धिरेकादशाहादिति पितृमेध उक्तं द्रष्टव्यम् ॥

११. एकान्तेऽपि विधिप्रतिषेधानुसारिणः शुचयस्तान् । मन्त्रवतोऽधीतवेदान्सर्वकृत्येषु श्रौतेषु गार्ह्येषु स्मार्तेषु सर्वकर्मसु सर्वेषु पित्र्येषु च भोजयेत् । …… ॥

१२. सप्तम्यर्थे तसिल् । देशः प्रयागादिः । कालः सूर्यग्रहणादिः । शौच कृच्छ्रादिपरिसमाप्तिः । सम्यक् समीचीनः प्रतिग्रहीता तुल्यगुणेषु वयोवृद्धः श्रेयानित्यादिः । ……………… ॥

१३. ……………यस्माद्वोद्धृत्याग्रं न दीयते न तद्भोक्तव्यम् ॥

१४. यद्यद्भक्ष्यमाणं पश्यतो लालोत्पद्यते तत्क्षारम् । …… ॥

१५. अवरान्नं कुलित्थादि । तत्संसृष्टान्नस्य होमो न विद्यते ॥

१६. अथ यस्यैवंविधमेव भोज्यमुपस्थितं तस्य कथं होमस्तत्राह । अहविष्यस्येति ॥ औपासनात्पचनाद्वाग्नेरुदीचीनमुष्णं भस्मापोह्य तस्मिन्भस्मनि जुहुयात् ॥ वैश्वदेवमन्त्रैरेषोऽहविष्यस्य होमः । तदेवं क्रियमाणं

हुतं च भवति । अहवनार्थनिवृत्तेः[1] । अहुतं चाग्नौ भवति भस्ममात्रत्वात् ॥ ……… । अपर आह । यान्यहविष्याणि व्यञ्जनान्यहरहर्भोज्यानि तेषामेव संस्कारो न सकृच्च होममन्त्रक इति ॥

२३. उपनयनादर्वाङ्गप्रयता इत्यपरं दर्शनम् ॥

२४. उपनयनमपि परामृशतस्तच्छब्दस्य निष्ठाशब्दसामानाधिकरण्यास्त्रीलिङ्गता । सा निष्ठा तदुपनयनमवसानमनधिकारस्येति ॥

२५. अस्मिन्नर्थे स्मृतिरपि भवति । प्रागुपनयनात्कामचारवादभक्षोहुताद्ब्रह्मचारी……इति गौतमः ( २,१-३ ) ॥

---

## PAṬALA VII., KAṆḌIKÂ 16.

१. मासिकश्राद्धविधित्सया तस्य प्ररोचनार्थोऽयमर्थवादः प्रस्तूयते ।…… …………… ॥

२. तादर्थ्ये एषा चतुर्थी । प्रजानां निःश्रेयसार्थम् । निःश्रेयसा चेति पाठे छान्दसो यकारस्य चकारः । अपर आह । छान्दसो लिङ्गव्यत्ययः । प्रजानिःश्रेयसं चास्य कर्मणः फलमिति ॥

३. तत्र श्राद्धकर्मणि पितरः पितृपितामहप्रपितामहा देवताः । ब्राह्मणास्तु भुञ्जाना आहवनीयकृत्ये वेदितव्याः । त्रीणि श्राद्धे करणानि होमो ब्राह्मणभोजनं पिण्डदानं चेति । तत्र भोजनस्य प्रधानतरत्वख्यापनार्थोयमर्थवादः ॥

४. तदिदं कर्म मासे मासे कर्तव्यम् । वीप्सावचनाद्यावज्जीविकोऽभ्यासः ॥

५. अपरपक्षस्य यान्यहानि तेष्वपराह्णः प्रशस्ततरः ॥

८. …………………तस्यापत्ये प्रजासंताने स्त्रीप्रायं प्रायेण स्त्रियो भवन्ति ।

९. पुत्रा जायन्ते । अचोराः पुत्रा भवन्ति ॥

१०. वृत्ताध्ययनसंपत्तिर्ब्रह्मवर्चसम् ॥

१२. पुमांस एव भवन्ति । बहवश्च भवन्ति । न चानपत्यः प्रमीयते । जीवत्स्वेव पुत्रेषु संनिहितेषु च स्वयं म्रियते न तेषु मृतेषु न देशान्तरं गतेषु नापि स्वयं देशान्तरं गत इति ॥

---

[1] अर्थनिवृत्तैः G. U.[1]; भावार्थे निमित्ते G. U.[2]—

१४. कर्षः कृषिः । राद्धिः सिद्धिः ॥

१७. व्यवहारो वाणिज्यं शास्त्रपरिज्ञानं वा ॥

२० त्रयोदशे बहवः पुत्रा मित्राणि च भवन्ति । अपत्यानि दर्शनीयानि भवन्ति । किंतु ते पुत्रा युवमारिणो युवान एव म्रियन्ते ॥

२५. धर्मार्जितं यद्द्रव्यं तीर्थे पात्रे च प्रतिपन्नम् । तेनापि तथा तीव्रतरा पितॄणां प्रीतिर्द्राघीयांसं च कालमिति ॥

२६. उत्तरत्र मांसग्रहणादिहापि मांसस्यैव ग्रहणम् । ...... ॥

२८. एतेन माहिषेण मांसेनान्येषामपि ग्राम्याणामजादीनामारण्यानां शशादीनां मांसं मेध्यं व्याख्यातं पितॄणां प्रीतिकरमिति । मेध्यग्रहणं प्रतिषिद्धानां माभूदिति ॥

---

## PAṬALA VII., KAṆḌIKÂ 17.

१. खड्गचर्मोपस्तरणेष्वासनेषूपविष्टेभ्यो ब्राह्मणेभ्यो दत्तेन खड्गमांसेनानन्त्यं कालं पितॄणां प्रीतिर्भवति । आनन्त्यमिति पाठे स्वार्थे ष्यञ् ॥

४. ......सृष्ट उत्साहवान् । सृष्टश्चेद्ब्राह्मणवधेहत्वापीति [गौ० ध० शा० २२, ११] दर्शनात् । वृत्तिसर्गता न येषु क्रम इत्यत्र सर्ग उत्साहः । ......... कीदृशान् । ब्रह्मविद आत्मविदः । योन्यादिभिरसंबन्धान् ......... मन्त्रसंबन्धा ऋत्विजो याज्याश्च । अन्तेवासिसंबन्धाः शिष्याचार्याश्च ॥

६. एतेन सोदर्येणान्तेवासिनो बहुवचननिर्देशात्पूर्वत्र निर्दिष्टा योन्यादिसंबन्धाः सर्व एव व्याख्याताः । अन्येषामलाभे समुदेता भोजयितव्या इति ...॥

८. परस्परं भुञ्जतेस्यामिति संभोजनी । अधिकरणे ल्युट् । ...... ॥

९. एतद्व्याचष्टे ॥ इहैवेत्यादि ॥ संभुञ्जनी परस्परभोजनस्य निमित्तभूता दक्षिणा-श्राद्धदानक्रिया गृहाद्गृहं गत्वेहैवेह लोके नश्यतीत्यर्थः ॥

१०. ......... यो वयोवृद्धः स तावद्ग्राह्यः । तत्रापि यो द्रव्येण कृश ईप्सन्नीप्समानश्च भवति स ग्राह्यः । यद्वा वयोवृद्धो द्रव्यकृशोपि द्रव्यकृशोप्यवृद्धोपीति द्वयोस्तु समवाये यथारुचिरिति ॥

११. श्राद्धदिनात्पूर्वेद्युरेव ब्राह्मणेभ्यो निवेदितव्यम् । श्वः श्राद्धं भविता । तत्राहवनीयार्थे भवद्भिः प्रसादः कर्तव्य इति ॥

१२. ......... अद्य श्राद्धमिति ॥

१३. तृतीयमामन्त्रणमाह्वानं भोजनकाले सिद्धमागम्यतामिति तत्र तृतीयं भवति ॥

१४. न केवलमेव निवेदनमेव त्रिर्भवति । किं तर्हि । यच्च यावच्च श्राद्धे क्रियते तत्सर्वत्र त्रिरावर्त्यमित्येके मन्यन्ते । अत्र पक्षे होमभोजनपिण्डानामप्यावृत्तिस्तस्मिन्नेवापराह्णे ॥

१६. सर्वेषु श्राद्धेषु त्रिष्वपि वृत्तेषु समाप्तेषु सर्वतस्त्रयाणां श्राद्धानां य ओदनशेषस्ततः समवदाय शेषस्य ग्रासावरार्ध्यं प्राश्नीयात् । यथोक्तं गृह्ये [ ८, ९ ] । उत्तरेण यजुषा शेषस्य ग्रासवरार्ध्यं प्राश्नीयादिति । तत्र प्रयोगः । पूर्वेद्युर्यथा निवेदनं तद्वदपरेद्युःप्रातर्भोजनकाल आमन्त्रणम् । ततो होमादिपिण्डदानान्तमेकैकमपवर्ज्य । ततः सर्वतः समवदाय प्राणे निविष्टोऽमृतमिति मन्त्रेण [ तैत्ति० आर० १०, ३४,१ ] प्राशनमिति ॥

१७. प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥

इति वैयाकरणाः । तस्याः शरवत्या उदक्तीरवासिन उदीच्यास्तेषां वृत्तिराचारः । आसनेषूपविष्टानां ब्राह्मणानां हस्तेषूदपात्रानयनम् । उदपात्रादर्घ्यपात्रादप आदायार्घ्यदानमिति । पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमिति मन्त्रा आश्वलायनके [ गृ० सू०. ४,७,१० ] । यद्यप्युदीच्यवृत्तिरित्युक्तं तथापि प्रकरणपाठसामर्थ्यात्सर्वेषामेव भवति ॥

१९. अथ ब्राह्मणाः काममित्यादीत्यतिसृजेयुरनुजानीयुः । तैश्चातिसृष्ट उद्धरेज्जुहुयाच्च । उद्धरणं नाम ब्राह्मणार्थे पक्वादन्नादन्यस्मिन्पात्रे पृथक्करणम् ॥

२०. श्वभिरिति बहुवचनाद्ग्रामसूकरादीनां तादृशानां ग्रहणम्[1] । अपपात्राः पतितादयः प्रतिलोमादयश्च ......... ॥

२१. श्वित्रः श्वेतकुष्ठी । शिपिविष्टः खलतिः । विवृतशेफ[2] इत्यन्ये । परतल्पगामी यः परतल्पं गत्वा कृतप्रायश्चित्तस्तस्य ग्रहणम् । आयुधीयपुत्रः क्षत्रियवृत्तिमाश्रितो य आयुधेन जीवति ब्राह्मणस्तस्य पुत्रः । शूद्राद्ब्राह्मण्यामुत्पन्नश्चाण्डालः । न तस्य प्रसङ्गः । ब्राह्मणान्मन्त्रविद इत्युक्त-

[1] Omitted in G. U.[1,3].—[2] व्रतगूढ G. U.[1].—

त्वात् । तस्मादेवं व्याख्येयम् । क्रमविवाहे शूद्रायामुत्पाद्य पश्चाद्ब्राह्मण्या-मुत्पादयति । तस्य पुत्रः शूद्रोत्पन्नो ब्राह्मण्यामिति । स हि पिता शूद्रः संपन्नः । श्रूयते हि । तज्जाया जाया भवति यदस्यां जायते पुनरिति...... ॥

२२. मधु वाता ऋतायत इति त्र्यृचस्त्रिमधुः । तत्र हि प्रत्यृचं त्रयो मधुशब्दाः । इह तु तदध्यायी पुरुषस्त्रिमधुः । त्रिसुपर्णश्चतुष्कपर्दा युवतिः सुपेशेत्यादिकस्त्र्यृचः । अन्ये तु तैत्तिरीयके [ आर० १०,४८-५० ] । ब्रह्ममेतु मामित्यादयस्त्रयोनुवाका इत्याहुः । तत्र हि य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यादिति श्रूयते । पूर्ववत्पुरुषे वृत्तिः । नाचिकेतोग्निर्बह्वीषु शाखास्वभिधीयते । तैत्तिरीयके कठवल्लिषु शतपथ इति च तं यो वेद मन्त्रब्राह्मणेन सह स त्रिणाचिकेतः । नाचिकेतानुवाकांस्त्रीनित्येके । विराजोनुवाकाध्यायीत्यन्ये । प्राणापानेत्यादि । अश्वमेधः पुरुषमेधः सर्वमेधः पितृमेध इति चत्वारो मेधास्तदध्यायी चतुर्मेधः । चतुर्णां यज्ञानामाहर्तेत्यन्ये ।..............ज्येष्ठसामतल्वकाराणां प्रसिद्धम् । उदु त्यं चित्रमेत्येतयोर्गीतम् । तद्गायतीति ज्येष्ठसामगः । ज्येष्ठसामिक इति पाठे व्रीह्यादेत्वात् ठन् ।...। अनूचानपुत्रस्त्रैविद्यपुत्रः श्रोत्रियपुत्र इत्यपि पठन्ति । तदादरार्थं द्रष्टव्यम् । ..............वेदाध्यायीत्यस्याप्यन्त इति पशब्दं पठन्ति सोपपाठः । एतेन पञ्चाग्नी अविभक्तिकपाठो व्याख्यातः ॥

२३. श्राद्धकर्मण्यारब्धे कारणाद्विलम्बे मध्ये यद्यादित्योस्तमियात्तदा श्राद्धशेषं नक्तं न कुर्वीतापरेद्युर्दिवैव कुर्वीतेति ॥

२४. पूर्वैर्गुणिनिवेदनप्रभृत्या पिण्डनिधानान्मध्ये कर्तुर्भोजनप्रतिषेधः ॥

२५. अनन्तरमन्यत्र राहुदर्शनादिति पठन्ति । न च नक्तमित्यस्यापवादः । राहुदर्शने नक्तमपि कुर्वीतेति । उदीच्यास्त्वेतत्प्रायेण न पठन्ति तथा च पूर्वैर्न व्याख्यातम् । प्रत्युत न च नक्तमित्येतत्सोमग्रहणविषयमिति व्याख्यातम् । पठ्यमानं तु न च नक्तमित्यस्यानन्तरं पठितुं युक्तम् ॥

## PAṬALA VIII., KAṆḌIKÂ 18.

१. विलयनं नवनीतम् । अल्पं यस्य दध्नो हस्तादिना मथनमात्रं न जलेन मिश्रणं तन्मथितम् ।..............मांसमप्रतिषिद्धमपि ।...॥

[1] वेदाध्यायीत्यस्यानन्तरमिति शब्दं पठन्ति । G. U, ¹⁷⁰.—

२. कृष्णधान्यं कृष्णमाषादि कृष्णकुलित्थादि न कृष्णव्रीह्यादयः। ............ ॥

३. अहविष्यं कोद्रवादि ............... ॥

४. ............अच्छायोपग इति च्छायामनुपगच्छन्। स्थानासनिकः स्थानासनवान्दिवा स्थानं रात्रावासनं न कदाचिच्छयनम्। एतद्विलयनाद्यारभ्यानन्तरोक्तं व्रतं संवत्सरं चरेत्। एतद्व्रतमष्टाचत्वारिंशद्वर्षसाध्येन ब्रह्मचारिव्रतेन संमितं सदृशम्। यावत्तस्य फलं तावदस्यापीत्याचक्षते धर्मज्ञाः। न केवलं स्मृत्यादिकमेव प्रयोजनमिति। अपर आह। विलयनं मथितमित्यादिकं व्रतान्तरं स्मृत्यादिकमस्य। अधोनाभीत्यादिकं तु संमितं व्रतमिति च। तच्च ब्रह्मचारिणो गृहस्थस्य च भवति। तथा च बौधायनः। अष्टाचत्वारिंशत्संमितमित्याचक्षते। तस्य संक्षेपः संवत्सरः। तत्संवत्सरव्रतमनुव्याख्यास्यामः। स यदि ब्रह्मचारी स्यान्नियमेन प्रतिपद्येत। अथ यद्यब्रह्मचारी स्यात्केशश्मश्रुलोमनखानि वापयित्वा तीर्थं गत्वा स्नात्वेत्यादि ॥

६. ............अन्नं संस्कुर्वन्ति। शुचय इति वचनमाधिक्यार्थमार्याः प्रयता इति पूर्वमेव [ २,३,१ ] प्रायत्यस्य विहितत्वात् ॥

१३. तेषां संवत्सरस्याह्नामुत्तमहः समाप्तिदिनम्। तस्मिँल्लोहेन लोहितवर्णेनाजिन श्राद्धं कार्यम्। दृश्यते चास्मिन्नर्थे लोहशब्दः। लोहस्तूपरो भवत्यप्यत्र तूपरः कृष्णसारङ्गो लोहितसारङ्गो वेति। चमकेषु [वाज० संहि० १८,१३ ] च भवति। श्यामं च मे लोहं च म इति ॥

१४. मानं धिष्ण्यं वेदिका। दृश्यते हि मिनोतेरस्मिन्नर्थे प्रयोगः। अग्रेणाग्नीध्रं चतुरस्रं विमिन्वति पुरस्तदुन्नतं पश्चान्निनतमिति। तस्यैव चायमुपसर्गरहितस्य प्रयोगः। तन्मानं कारयेत्कर्मकरैः। प्रतिच्छन्नं च तद्भवति तिरस्करिण्यादिना। इदमपि ग्रामाद्बहिरेव ॥

१७. अत ऊर्ध्वं मासिश्राद्धं क्रियतां वा माकारि। अकरणेपि न प्रत्यवाय इति ॥

---

## PAṬALA VIII., KAṆḌIKÂ 19.

१. ......गौराणां सर्षपाणां संबन्धीनि चूर्णानि कर्मकरैः कारयेत्। कारयित्वा तैश्चूर्णैः पाणिपादौ मुखं कर्णौ च प्रक्षालयेत्। प्रक्षाल्य चूर्णशेषं प्राश्नी-

यात् । प्रास्येति पाठे प्रास्येद्विकिरेत् । एतत्तावत्प्रतितिष्यं विशेषकृत्यं परं तु प्रत्यहं कर्तव्यम् । प्राश्य च यदसौ वातो नातिवात्यधो नातीत्य वाति तदासनस्तादृगासनो भुञ्जीतेति वक्ष्यमाणेन संबन्धः । तत्र बस्तस्याजिनमासनं स्यादिति प्रथमः कल्पः । वाग्यतो दक्षिणां दिशमभिमुखो भुञ्जीत ॥

२. ..................तस्मान्मातृवता नैतद्व्रतं कार्यम् ॥

३. चमु भक्षणे । यत्र चम्यते स चमसो भोजनपात्रम् । स औदुम्बरस्ताम्रमयः । सुवर्णेन मध्येलंकृतः । प्रशास्तः प्रशस्तो भोजने ॥

४. न चान्येन कर्तुः पित्रापि तत्र पात्रे भोक्तव्यम् । अभिधा स्वर्थानुवादिनी । भोक्तव्य इति पुल्लिङ्गपाठेप्येष एवार्थः ॥

५. ...............संनयन्पिण्डीकुर्वन् ॥

७. भोजनपात्रं सव्येन पाणिना न विमुञ्चेत् ॥

८. विमुञ्चेद्वा । किमर्थमिदम् । यावता प्रकारान्तरं न संभवति । सत्यम् । प्रक्रमात्तु नियम्यत इति न्यायेन य एव प्रकारः प्रथमे भोजने स एवान्तादनुष्ठातव्य इति तदर्थमिदम् ॥

९८. पाणिरत्र दक्षिणः ॥

१५. तेन सर्पिष्मता ब्राह्मणं भोजयेदित्यादौ [२,२०,३] ब्राह्मणो भूत्वा न भुञ्जीत । अनुदेश्यानि च पितृभ्यो देवताभ्यश्च संकल्पितानि न भुञ्जीत ॥

१६. उत्तराच्छादनमुपरिवासस्तेन यज्ञोपवीतं कृत्वा भुञ्जीत । नास्य भोजने अपि वा सूत्रमेवोपवीतार्थे [२,४,२२] इत्ययं कल्पो भवतीत्येके । समुच्चय इत्यन्ये ॥

१९. ............इतिशब्दाच्चान्यदेवं युक्तम् ।

२०. मघासु च पूर्वपक्षेपि श्राद्धविधानेन सर्पिर्मिश्रमन्नं ब्राह्मणान्भोजयेत् ॥

---

PAṬALA VIII., KAṆḌIKÂ 20.

१. येनोपायेनोपयोजयितुं शक्नुयादभ्यङ्ग उद्वर्तने भक्ष्ये भोज्ये चेति तेनोपायेन मासिश्राद्धे तिलानां द्रोणं द्रोणमुपयोजयेत् । तत्रैकैकस्य ब्राह्मणस्य द्रोणं द्रोणमुपयोजयितुमशक्यत्वात्समुदितानुपयोजयेत् । द्रोणं द्रोणमिति वीप्सावचनं प्रतिमासिश्राद्धमुपयोजनार्थमिति केचित् । अन्य

एवंभूताः प्रबला यत्नेनान्विष्य भोजयितव्या इति ॥

६. द्वितीये तिष्ये प्राप्ते द्वौ भोजयेदन्यत्समानमेवा तृतीयात् ॥

७. ......ब्राह्मणभोजनं चाभ्युच्चयेन भवति । चतुर्थप्रभृति चत्वारः पञ्चमप्रभृति पञ्चेत्यादि ॥

१०. आत्ततेजांसि तक्रवाजिनादीनि नोपभुञ्जीत ॥

१६. पर्वसंधीनां स्फोटनानि च वर्जयेदकारणात् । कारणं श्रमवातादि । वादनस्फोटनानीति समासपाठ एष एवार्थः ॥

१८. एकश्चशब्दोनर्थकः । केचिन्नैव पठन्ति । धर्माविरुद्धा ये द्रव्यपरिग्रहास्तेषु योक्तोत्पादयिता स्यात् ॥

१९. तीर्थं गुणवत्पात्रं यज्ञो वा ।.........॥

२०. यन्ता नियन्ताप्रदाता । अतीर्थे यन्ता वा स्याद्यतः पुरुषादप्रदानेपि भयं न स्यात् । भयसंभवे तु पिशुनादिभ्यो देयम् ॥

२१. अर्थप्रदानप्रियवचनानुसारादिभिर्मनुष्याणां संग्रहणशीलः स्यात् ॥

---

## PAṬALA IX., KAṆḌIKÂ 21.

१. .........इतिशब्दः परिसमाप्त्यर्थः । एतावन्त एवाश्रमा इति चतुर्णामेवोपदेशेपि चत्वार इति वचनम् । ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्येति [गौ० ध० शा० ३,३६] स्मृत्यन्तरोक्तं मा ग्राहीति ॥

२. .........। क्षेममभयपदम् ।......... ॥

४. अनूत्सर्गश्छान्दसो दीर्घः । विद्याया अनुत्सर्गोपि सर्वेषामाश्रमाणाम् । तस्मादाचार्यकुले वासः समानः ॥

६. प्रत्याश्रमं यानि कर्माणि विहितानि तानि बुद्ध्वा ।......... ॥

७. अथानन्तरं परिव्राजो धर्मा उच्यन्ते ।......... ॥

८. अत एव ब्रह्मचर्याश्रमादेव ब्रह्मचर्यवानविप्लुतब्रह्मचर्यः प्रव्रजति प्रव्रज्यां कुर्यात् । यदि तत्रैव पक्वकषायो भवति । श्रूयते च । ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति यदहरेव विरजेत्तदहरेव प्रव्रजेदिति च । अत एवेति वचनाद्गृहस्थाश्रमप्रविष्टस्य तत्परित्यागेनाश्रमान्तरप्राप्तिराचार्यस्यानभिमतैव लक्ष्यते । तत्रायमभिप्रायः । दारपरिग्रहे सति यावज्जीवमग्निहोत्रं जुहुयादिति श्रुत्या विरुध्यते । स कथं परिव्रजेदिति । तस्मात्सत्यपि वैराग्ये

काम्यकर्मपरित्यागेन नित्यानि नैमित्तिकानि च कुर्वन्प्रतिषिद्धानि च वर्ज-यन्गृहस्थ एव मुच्यत इति । तथाह याज्ञवल्क्यः । न्यायार्जितधनस्तत्त्व-ज्ञाननिष्ठोतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोपि विमुच्यत इति ॥ अथ योनाहिताग्निस्तस्य विरक्तस्य मुन्याश्रमप्रवेशे को विरोधः । ऋणश्रुतिविरोधः । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति । मनुरपि [६,३५] । ऋणानीत्यादि । मोक्षो मोक्षाश्रमः । नन्वेवं ब्रह्मचर्यादपि प्रव्रज्या नोपपद्यते । अथ तत्र यदहरेव विरजेत्तदहरेव प्रव्रजेदिति श्रुत्या युक्तं प्रव्रजितुम् । तदा विरक्तस्य गृहस्थस्यापि युक्तं भविष्यति । स्मर्यते च । प्राजापत्यामित्यादि [ मनु० ६,३८ ] तथा यो गृहस्थो वृद्धो मृतभार्यः पुनर्दारक्रियायामसमर्थस्तस्यापि युज्यते प्रव्रज्या । तस्माद्यदहरेव विरजेत्तदहरेव प्रव्रजेदित्येष एक एवांशः प्रव्रज्यायाः । सर्वमन्यदविरक्तस्येति युक्तम् । एवकारस्तु सूत्रे श्रुत्यनुरोधेनोक्तः । यथा गृहाद्वा वनाद्वेति ब्रुवाणैव श्रुतिर्ब्रह्मचर्यादेव प्रव्रजेदित्याह तथेति॥

१० ...............शर्म सुखं वैषयिकं तदस्य नास्तीत्यशर्मा ।...... .........इहार्थाः कृष्यादयः परलोकार्था जपहोमादयो यस्य न सन्ति सोनिहोनमुत्र इत्युक्तः । एवंभूतश्चरेत् । नैकस्मिन्ग्रामे द्व्यहमपि वसेत् । अत्र गौतमः [ ३,२१ ] न द्वितीयामपर्तु रात्रिं ग्रामे वसेत् ॥

११. यत्परैर्मुक्तं परित्यक्तमयोग्यतया ।............॥

१२. सर्वैरेव वासोभिः परिमोक्षमेक उपदिशन्ति । न किंचिदपि वासो बिभृयात् । नग्न एव चरेदिति । अपर आह । सर्वतो विधितो निषेधतश्चास्य परिमोक्षमेके ब्रुवत इति न किंचिदस्य कृत्यं न किंचिदस्य वर्ज्यमिति ॥

१३. .........आत्मानमध्यात्मपटलोक्तमन्विच्छेदुपासीतेति ।...... ॥

१४. आत्मनि बुद्ध्यवगते सति तदेव ज्ञानं सर्वमशुभं प्रक्षाल्य क्षेमं प्रापयति । स्मर्यते च । यथैधांसीत्यादि [ भगवद्गीता ४.३७ ] । तदिदं निराकरोति ॥

१५. यान्येव यतेरवश्यं कर्तव्याकर्तव्यप्रतिपादनपराणि शास्त्राणि

तैरेतद्विप्रतिषिद्धम् । तत्र मनुः [ ६,८ ] । क्रुध्यन्तमित्यादि । अतो यति-मेव प्रकृत्य यानि कर्माणि विहितानि तानि कर्तव्यानि । यानि च निषि-द्धानि तानि वर्जनीयानीति । बुद्धे क्षेमप्रापणमित्येतत्पक्षविरुद्धमाह ॥

१६. आत्मबोधमात्रेण चेत्क्षेमं प्राप्येत तदेहैव शरीरे दुःखं नोपल-भेत ज्ञानी । न चैतदस्ति । न हि ज्ञानिनां मूर्धाभिषिक्तंमन्यमानोपि क्षुधा दुःखमेव तावत्क्षणमात्रमपि सोढुं प्रभवति । कथं तर्हि तत्त्वज्ञान-मात्रेण दुःखं नानुभूयत इत्यस्ति शास्त्रम् । अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः । तरति शोकमात्मविदिति श्रुतिभिरिहैव विशोकत्वं ज्ञातं तद्विरुध्यते । तत्राह ॥[1]

१७. तत्त्वज्ञाने ज्ञातेपि दुःखक्षयाभावाद्दुःखक्षयो येन साधनेन भवति तदन्यत्परं ज्ञानोत्पत्तेरनुष्ठेयमस्तीति व्याख्यातम्[2] । परलोकभवं दुःखमेतेनैव व्याख्यातम् । न स्वैरचारिणां निवर्तत इति । तस्मात्स्वकर्मभिरपरिपक्वक-षायः श्रवणमननिदिध्यासनैः साक्षात्कृतात्मस्वरूपः प्रतिषिद्धेषु कटाक्ष-मप्यनिक्षिपन्नष्टाङ्गयोगनिरतो मुच्यत इति । अत्र बौधायनः [ २,१८,१ ] एकदण्डी त्रिदण्डी वेति । गौतमोपि [ ३,२२ ] मुण्डः शिखी वेति ॥

१९. प्रकर्षेण व्रजत्यपुनःप्रवेशाय वनं प्रतिष्ठत इति । तथा च गौ-तमः [ ३,३३ ] ग्रामं च न प्रविशेदिति । गतमन्यदुत्तरं च ॥

२१. कः पुनरेकोग्निः । न तावदौपासनोब्रह्मचारित्वात् । तस्माल्लौकि-केग्नौ यथापूर्वं सायं प्रातः समिधमादध्यादित्येषोर्थो विवक्षितः । अपर आह । श्रामणकेनाग्निमाधायेति गौतमः । श्रामणकं नाम वैखानसं सूत्रं तदुक्तेन प्रकारेणैकोग्निराधेयस्तस्मिन्सायं प्रातरग्निकार्यमिति । तथा च बौधायनः [ २,११,१४-१९ ] वानप्रस्थो वैखानसशास्त्रसमुदाचारेणे-त्यादि । अन्यद्गतम् ।

## PAṬALA IX., KAṆḌIKÂ 22.

२. मूलादिभिः स्वयंगृहीतैः कंचित्कालं वर्तयित्वान्ततोन्ते प्रवृत्तानि स्वयमेव पतितान्यभिनिश्रयेदिति वक्ष्यमाणेन संबन्धः । तान्यभिनिश्रित्य तैर्वर्तयेदिति ॥

---

[1] G. U. omits all from कथं तर्हि to तत्राह.— [2] G. U. omits all from तत्त्वज्ञाने to व्याख्यातम् ।

४............तत आकाशमित्यभिनिश्रयेन्न किंचिद्भक्षयेदिति·····॥

५. संयुज्यते संश्रीयत इति संयोगः । तेषां मूलादीनां मध्य उत्तर-मुत्तरं समाश्रियमाणं फलतो विशिष्टमिति द्रष्टव्यम् ॥

६. अथेति पक्षान्तरोपन्यासे । पूर्वं ब्रह्मचर्यादेव वनप्रवेश उक्त एके त्वाचार्यास्तस्यैव वानप्रस्थस्यानुपूर्व्यं कर्मण्युपदिशन्ति ॥

९. .....................अस्मिन्पक्षे प्राजापत्यां निरूप्येष्टिं परिव्राज इत्युक्तेन प्रकारेण [मनुः ६.३८] श्रौताग्नीनामात्मनि समारोप्य श्रामणकेनाग्निमाधायैकाग्निर्भवेत् ॥

१०.......इदं सकुटुम्बस्यैकाकिनश्च समानम् । एकाकिन एवेत्यन्ये ॥

११. यदा शिलोञ्छवृत्तिर्जातात ऊर्ध्वं न किंचिदपि प्रतिगृह्णीयात् ॥

१४. सर्ववर्णाश्रमसाधारणमेतत् । तथा चोत्तरत्र तस्य ग्रहणम् ॥

१५. काजमपि वास्यादिवदुपकरणविशेषो दारुमयः ॥

१६.·····इतराणि भार्यायै दत्त्वारण्यमवतिष्ठेताश्रयेदिति ॥

१७. ......प्रतीक्षातिथिपूजा । ......... ॥

१८. येषु दर्शपूर्णमासादिषु पुरोडाशा विहिता गृहस्थस्य तेष्वस्य तत्स्थाने चरवः कार्याः ॥

१९. सर्वं कर्मकाण्डं साङ्गप्रधानमुपांशु भवति । पारायणब्रह्मयज्ञाध्ययनेन सह । तदप्युपांशु कर्तव्यमिति ॥

२०. उपांशुवचनादेव सिद्धे पुनर्वचनमाभिमुख्यप्रतिषेधार्थम् । तेनाण्यस्था यथा नाभिमुख्येन शृणुयुस्तावदुपांश्विति ॥

---

PAṬALA IX., KAṆḌIKÂ 23.

१. इदमेकाकिनो वानप्रस्थस्य । भूयांसं नियममिच्छन्न सस्यं संचिनुयात् ।......... ॥

३. निरूपिता आश्रमाः । अथेदानीं तेषामेव पक्षप्रतिपक्षरूपेण प्राधान्यमप्राधान्यं च निरूप्यते ॥

४. अष्टाशीतिसहस्राणि गृहस्था ऋषयः प्रजामीषिरे प्रजानिष्पत्तिमभ्यनन्दन् । ते अर्यम्णो यो दक्षिणेन पन्था दक्षिणायनमार्गस्तं प्राप्य छान्दोग्योक्तेन धूमादिमार्गेण गत्वा पुनरपीह संभूय श्मशानानि भेजिरे मरणं

प्रपेदिरे । जायस्व म्रियस्वेत्यादिजीवभावमापेदिर इति गृहस्थानां निन्दा ॥

५. ये तु प्रजापतिं नाभ्यनन्दंस्त उत्तरायणार्चिरादिमार्गेण गत्वामृतत्वम् । विभक्तिव्यत्ययः । अमृतत्वाय हि कल्पते । वचनव्यत्ययः । कल्पन्ते समर्थाः संपद्यन्ते ॥

७. अथाप्यपि च तेषामूर्ध्वरेतसां संकल्पादेव सिद्धयो भवन्ति ॥

९. श्रुतितो श्रुतेर्यदहरेव विरजेत्तदहरेव प्रव्रजेदित्यादिश्रुत्यनुभवत्वात् ।....... ॥

११. श्मशानानि भेजिर इति निन्दां परिहरति ॥ यत्त्वित्यादि ॥ यत्तु गृहस्थानां श्मशानं श्रूयते स एष नानाकर्मणामग्निहोत्रादीनामन्ते पुरुषसंस्कारः पितृमेधाख्यो विधीयते न पिशाचो भूत्वा श्मशानमेव सेवत इति[1] ॥

१२. कुतस्तदित्याह[2] ॥ तत इत्यादि ॥ ततः परं श्मशानकर्मणोनन्तरमनन्त्यमपरिमितं स्वर्ग्यशब्दवाच्यं फलं श्रूयते । स एष यज्ञायुधीयजमानोऽञ्जसा स्वर्गं लोकमेतीति । अनन्त्यं स्वर्ग्यमिति तु पाठश्छान्दसोपपाठो वा ॥

---

## PATALA IX, KANDIKÂ 24.

१. अथापि च स एवायं पृथग्विरूढः प्रत्यक्षेणोपलभ्यते स एव द्विधाभूत इति लक्ष्यते । दृश्यते हि सारूप्यं द्वयोः । देहमात्रं तु भिन्नमिति । देहत्वमिति स्वार्थिकस्त्वप्रत्ययः ॥

२. यदि पुत्ररूपेणावस्थानं किमेतावतेत्याह ॥ त इत्यादि ॥ ते पुत्राः शिष्टेषु चोदितेषु कर्मसु वर्तमाना अवस्थिताः पूर्वेषां पितृपितामहप्रपितामहादीनां सांपरायेण परलोकेन संबद्धानां कीर्तिं वर्धयन्ति । अस्यायं पुत्र एवंकर्मास्यायं पौत्र इति । स्वर्गं च वर्धयन्ति । कीर्तिमतां हि स्वर्गवासः श्रूयते[3] ॥

६. प्रलयानन्तरं सर्गः[4] । तत्र संसारस्य बीजार्थाः प्रजापतयो भविष्यन्तीति भविष्यत्पुराणे श्रूयते ॥

---

[1] G U. om. the whole com. on Sûtra 11. [2] Om. in G. U.[1]— [3] कीर्तिं स्वर्गं च वर्धयन्ति G. U,[1] and omits the rest. [4] स्वर्गः G. U.,[1] just as the Dev. MSS.

८. ………अनुप्रदानमन्तर्वेदि बहिर्वेदि च प्रदानम् । ………अ-न्यत्तु ऊर्ध्वरेतसामाश्रमादिकं प्रशंसन्पुरुषो रजः पांसुर्भूत्वा ध्वंसते नश्यति इतिशब्दो वचनसमाप्त्यर्थः ।……………॥

९. तत्र प्रजासंताने ये पापस्य कर्तारस्त एव ध्वंसन्ति ध्वंसन्ते । न परान्पित्रादीन्हिंसन्ति । यदेव पर्णं वनस्पतेः कीटादिभिर्दूषितं तदेव पतति न च वनस्पतिं शाखां वा पातयन्ति तद्वत् ॥

१०. अस्येति सामान्यापेक्षमेकवचनम् । अस्य पित्रादेः पूर्वपुरुषस्या-स्मिँल्लोके पुत्रकृतैः कर्मभिः संबन्धो न विद्यते । दृष्टान्तोयम् । यथा पुत्र-कृतेषु कर्मसु पित्रादेः कर्तृत्वं नास्ति तथा च परस्मिँल्लोके कर्मफलैरपि संबन्धो नास्तीत्यर्थः[1] ॥

११. यदुक्तं ये पापकृतस्त एव ध्वंसन्ति न परान्हिंसन्तीति तदर्थरूप-मेतेन वक्ष्यमाणेन हेतुना वेदितव्यं निश्चेतव्यम् ॥

१२. प्रजापतेर्हिरण्यगर्भस्यर्षीणां च मरीच्यादीनामयं सर्गो देवता-दिस्तिर्यगन्तः । ते चाध्वस्ता एव स्वेस्वे पदे वर्तन्ते । यदि पुत्राः पापकृतः स्वयं ध्वंसमानाः परानपि ध्वंसयेयुस्तदेतन्नोपपद्येत ॥

१३. पुण्यकृतः सुखेनाद्यापि वर्तन्त इति तत्रोदाहरणमाह ॥ तत्रे-त्यादि ॥ तत्र स्वर्गे ये पुण्यकृतो वसिष्ठादयस्तेषां प्रकृतयः शरीराणि परा उत्कृष्टा ज्वलन्त्यो दीप्यमाना उपलभ्यन्ते यथा सप्तर्षिमण्डलम् । श्रूयते च । सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीति । इदमपि प्रमाणं न पु-त्राणां ध्वंसे पूर्वेषां ध्वंस इति ॥

१४. कर्मावयवेन पूर्वार्जितानां कर्मणामेकदेशेनाभुक्तशेषेण तपसा तीव्रेण वा कश्चिदूर्ध्वरेताः सह शरीरेणान्तवन्तं लोकं जयति[2] स्वर्गलोकं वा जयतीति यत्तत्स्यात्संभवेदिति । यच्च संकल्पादेव सिद्धिः स्यादिति तदपि स्यात् । न तु तदाश्रमाणां ज्यैष्ठ्यकारणमिति । तदेवमेकाश्रम्यं त्वाचार्या इत्ययमेव पक्षः स्थापितः। अन्य एवं मन्यन्ते। सर्व आश्रमा दूषिता भूषि-ताश्च । ततस्तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छतीत्येत-देव स्थितमिति ॥

---

[1] G. U.[1] om. पुत्रकृतैः-परस्मिँल्लोके.—[2] G. U;[1] omits जयति स्वर्गलोकं वा.—

PAṬALA X., KAṆḌIKÂ 25.

३. सर्वेषामेव प्राकाराणां मध्ये या पुरस्तस्यामन्तरस्यां पुरि वेश्म मापयेदात्मनः ॥

४. तस्य वेश्मनः पुरस्तादावसथः कारयितव्यः । आ समन्तादित्य वसन्त्यस्मिन्नित्यावसथ आस्थानमण्डपः । तस्यामन्त्रणमिति संज्ञा ॥

५. दक्षिणेनेत्येनबन्तम् । पुरमिति एनपा द्वितीयेति [पा०.२.३.३१] द्वितीयान्तम् । पुरस्य दक्षिणतोदूरे सभा कारयितव्या[1] । बहिर्वृत्तं यच्चाभ्यन्तरं तदुभयमपि संदृश्येतेत्येवमर्थमपि सैषा द्यूतसभा । तस्यां द्यूतार्थिनः प्रविशन्तीति तदायस्थानं राज्ञः ॥

६. …………लौकिका अग्नयोजस्राः स्युरविच्छेदेन धार्याः ॥

७. तेषु चाग्निषु नित्यमग्निपूजा कार्या यथा गृहमेध औपासने सायंप्रातरित्यर्थः । मन्त्रावपि तावेव । द्रव्यमपि तदेव ॥

८. आवसथाख्ये स्थानेतिथीन्वासयेत् । ते विशेष्यन्ते । श्रोत्रियावराध्यानिति । अवरपर्यायोवराध्यशब्दः । यदि सर्वान्वासयितुं न शक्नोति श्रोत्रियानपि तावद्वासयेदिति ॥

१०. गुरवः पित्रादयः । अमात्या मन्त्रिणः । तान्नातिजीवेत् । भक्ष्यभोजनाच्छादनादिषु नातिशयीत ॥

११. अस्य राज्ञो विषये राष्ट्रे क्षुधाहाराभावेन बुभुक्षया रोगेण व्याधिना हिमेन नीहारेण । वर्षादीनामुपलक्षणमेतत् । आतप आदित्यरश्मितापः । एतैः प्रकारैः । अभावाद्बुद्धिपूर्वं वा कश्चिदपि ब्राह्मणो नावसीदेदवसन्नो न स्यात् । राज्ञो ह्ययमपराधो यदाहाराभावेन कश्चिदवसन्नः स्यात् । बुद्धिपूर्वं वेत्यत्रोदाहरणम् । यदा कश्चिदृणं करं वा दाप्यो भवति तदा नासौ हिमातपयोरुपनिवेशितव्यो भोजनाद्वा निरोद्धव्यः । तथा कुर्वाणं राजा दण्डयेदिति ॥

१२. पूर्वोक्तायाः सभाया मध्येधिदेवनम् । यस्योपरि कितवा अक्षैर्दीव्यन्ति तत्स्थानमधिदेवनं तत्काष्ठादिनोद्धन्ति । उद्धत्यावोक्षति । अवोक्ष्य तत्राक्षान्युग्मसंख्यान्वैभीतकान्विभीतकवृक्षस्य विकारभूतान्यथार्थान्यावद्भिर्द्यूतं निर्वर्तेत तावतो निवपेत् । कः । यस्तत्र राज्ञा नियुक्तः सभिको नाम ॥

---

[1] दूरे सभा कारयितव्या om. G. U.[1]—

१३. आर्या द्विजातयः शुचयोर्थशुद्धाः सत्यशीलाः सत्यवादिन एवंभूता पुरुषास्तत्र दीविनारो देवितारः स्युः । त एव दिव्येयुरित्यर्थः । ते च तत्र देवित्वा यथापरिभाषितं पणं सभिकाय दत्त्वा गच्छेयुः । स च राज्ञे तमायमहरहः प्रतिमासं प्रतिसंवत्सरं वा दद्यात् । स एव स्थानान्तरे दीव्यतो दण्डयेत्सभास्थाने च कलहकारान् । तत्र याज्ञवल्क्यः [२,१९९-२००] ग्लह इत्यादि ॥

१४. ……………उत्सवादिष्वन्यत्रापि भवतीत्याचारः ॥

## PAṬALA X., KAṆḌIKÂ 26.

२. …………संग्रामे यज्ञस्तस्यात्मा यूपस्थानीयः । आत्मेति शरीरमाह । अन्तरात्मा तु पशुस्थानीयः । प्रत्यानीय दत्तं द्रव्यं दक्षिणा । सूत्रे तु तं यज्ञ इत्याहुरिति गौणो वादः ॥

९. तत्र गौतमः । [१०,२६] विंशतिभागः शुल्कः पण्य इति । यद्वणिग्भिर्विक्रीयते हिङ्ग्वादि तस्य विंशतितमं भागं राजा गृह्णीयात् । तस्य शुल्क इति संज्ञा । एष धर्म्यः शुल्कः । तमधिकृतैरवहारयेत् । ग्राहयेदिति । मूलादिषु विशेषस्तेनैवोक्तः [गौ० ध० शा० १०,२७] मूलेत्यादि ॥

११. अकराः । वर्णग्रहणात्प्रतिलोमादिस्त्रियो दाप्याः ॥

१२. व्यञ्जनानि श्मश्र्वादीनि यावत्तानि नोत्पद्यन्ते तावदकराः ॥

१४. तपस्विनोपि धर्मपरा एवाकरा नान्ये[1] । धर्मपरा इति किम् । य आभिचारिकमन्त्रसिद्धये तपस्तप्यन्ति तेप्यकरा मा भूवन्निति ॥

१५. यस्त्रैवर्णिकानां पादावनेजनवृत्तिः स शूद्रोप्यकरः ॥

१६. अन्धादयश्चाकरा यावदान्ध्यादि ॥

१७. ये च परिव्राजकादयो द्रव्यपरिग्रहैर्व्यर्था निष्प्रयोजनाः शास्त्रतो येषां द्रव्यपरिग्रहः प्रतिषिद्धस्तेप्यकराः । तथा च वसिष्ठः [१९,२३] । अकर इत्यादि ॥

१८. यत्र परदारा आसते कुमारी वा पतिंवरा तत्र युवालंकृतोबुद्धिपूर्वमज्ञानादनुप्रविशन्वाचा बाध्यः । अत्रेयमास्ते मात्र प्रविक्ष इति ॥

१९. ……द्रव्यानुरूपमपराधानुरूपं च । दुष्टभावग्रहणमाचार्यादिप्रेषितस्य प्रवेशो दण्डो मा भूदिति ॥

1 G. U.[1] omits this sentence.

२२. अथ संनिपातात्प्रभृति ते परदारकुमार्यौ राज्ञा भृत्ये ग्रासाच्छादनदानेन भर्तव्ये ॥

२४. परदारान्भर्त्रे श्वशुराय वा कुमारीं पित्रे भ्रात्रे वा । अनभ्युपगमे तु प्रायश्चित्तस्य यावज्जीवं निरोधः ॥

---

PAṬALA X., KAṆḌIKÂ 27.

१. चरिते तु निर्वेषे यथापुरं यथापूर्वम् । धर्मात् । तृतीयार्थे पञ्चमी। धर्मेण संबन्धो भवति । हिशब्दो हेतौ । यस्मादेवं तस्मादवश्यं प्रायश्चित्तं कारयितव्ये । ततो यज्ञविवाहादौ न कश्चन दोष इति ॥

२. ... योनपत्य आत्मनः शक्त्यभावं निश्चित्य क्षेत्रजं पुत्रमिच्छन्भार्यां परत्र नियुङ्क्ते मृते वा तस्मिंस्तत्पित्रादयः संतानकाङ्क्षिणस्तद्विषयमेतत्। कुलान्तरप्रविष्टा स्त्री सगोत्रस्थानीया भवति । सा हि पूर्वं पितृसगोत्रा सती भर्तृगोत्रधर्मैरधिक्रियते । अतः सा भर्तृगोत्रपक्षाणां सगोत्रस्थानीया भवति । भर्ता तु साक्षात्सगोत्रः । तां सगोत्रस्थानीयां न परेभ्योसगोत्रेभ्यः समाचक्षीत । इयमनपत्यास्यामपत्यमुत्पादयेति । सगोत्रायैव तु समाचक्षीत । तत्रापि देवराय तदभावे सपिण्डेभ्यः ॥

३. कः पुनः सगोत्रस्य विशेषस्तमाह ॥ कुलायेति ॥ हि यस्मात्स्त्री कन्या प्रदीयमाना कुलायैव प्रदीयत इत्युपदिशन्ति धर्मज्ञास्तस्मात्सगोत्रायैव समाचक्षीतेति। कुलाय कन्या क्वचिद्देशेषु दीयते गोत्रजेन केनचिदप्यनुभूयते । उक्तं च बृहस्पतिना ।

अभर्तृकाभ्रातृभार्याग्रहणं चातिदूषितम् ।
कुले कन्याप्रदानं च देशेष्वन्येषु दृश्यत इति[1] ॥

४. तमिमं नियोगं दूषयति ॥ तदिति ॥ यद्यप्येवं पूर्वे कृतवन्तस्तथापि तदद्यत्वे विप्रतिपन्नं विप्रतिषिद्धम् । कुतः । इन्द्रियदौर्बल्यात् । दुर्बलेन्द्रिया ह्यद्यत्वे मनुष्यास्ततश्च शास्त्रव्याजेन भर्तृव्यतिक्रम इति प्रसङ्गः स्यादिति सगोत्रविषये च यो विशेषः सोपि नास्तीति ॥

५. येन पाणिना पूर्वमग्निसाक्षिकं पाणिर्गृहीतः कन्यायास्तस्मात्पाणेरन्यो भवति सगोत्रस्यापि पाणिः । यस्मादेवं पाणेः परत्वमविशिष्टं समानं तस्माद‌विशेष इति । अवशिष्टमित्यपपाठः ॥

---

[1] G. U.[1] omits all from कुलायकन्या क्वचिद्देशेषु.—

६. पाणिरन्यो भवतु को दोषः । तद्व्यतिक्रम इत्यादि ॥ तस्य पाणेर्व्य-तिक्रम उभयोर्दंपत्योर्नरको भवति । खलु पुनरिति प्रसिद्धिद्योतकौ निपातौ । ……… ॥

७. आरभ्यतेनेनेत्यारम्भणः । योयं दंपत्योः परस्परं नियमः । स आम्भ-णो यस्य नियमारम्भणः । एवंभूतो योभ्युदयः स एव वर्षीयान्वृद्धतरः कस्माद्वर्षीयान् । एवमुक्तेन प्रकारेण नियोगलक्षणेन यदपत्यमारभ्यते तस्मा-देवमारम्भणादपत्याद्वर्षीयानिति । अपात्यादित्यपि पाठः । आपत्यादिति प्रायेण पठन्ति ॥

९. शूद्रस्त्वार्यायां त्रैवर्णिकायां प्रसक्तो वध्यः । एतच्च योन्तःपुरादिष्व-धिकृतो रक्षकः सन्स्वयमेव गच्छति तस्य भवति।…………॥

१०. अस्य शूद्रस्य या दारभूता तेन भुक्ता त्रैवर्णिका स्त्री तां कर्शये-द्व्रतनियमोपवासैः । या प्रजाता न भवति तद्विषयमेतत् । ब्राह्मणक्षत्रिय-विशां स्त्रियः शूद्रेण संगताः । अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतरा इति स्मरणात् ॥

११. अन्यः पूर्वः पतिर्यस्याः सान्यपूर्वा परभार्या । तस्यां सवर्णायां सकृद्गमने पादः पतति पतितः स्यात् । द्वादशवार्षिकं प्रायश्चित्तं तस्य तुरीयोंशस्त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्यमस्य प्रायश्चित्तम् । एतच्च श्रोत्रिय-भार्यायामृतुकाले कामतः प्रथमं दूषकस्य । तत्र गौतमः [२२,२९] द्वे परदारे त्रीणि श्रोत्रियस्येति ॥

१७. ब्राह्मणस्य त्वेतेषु निमित्तेषु चक्षुषो निरोधः कर्तव्यः पटबन्धा-दिना चक्षुषी निरोद्धव्ये यथा यावज्जीवं न पश्यति नतूत्पाटयितव्ये । न शारीरो ब्राह्मणदण्डोक्षतो ब्राह्मणो व्रजेदिति स्मरणात् । चक्षुनिरोध इति रेफलोपश्छान्दसः ॥

१८–१९. यो वर्णाश्रमप्रयुक्तान्नियमानतिक्रामति तं नियमातिक्रमण-मन्यं वा प्रतिषिद्धानां कर्तारं रहसि बन्धयेन्निगडितं निरुन्ध्यात् । आ समापत्तेः । यावदसौ नियमान्प्रतिपत्स्ये निषिद्धेभ्यो निवर्तिष्य इति ब्रूयात् ॥

२१. यदि दण्डे प्रवृत्तं राजानमाचार्यो ब्रूयादहमेतमतः परं वारयि-ष्यामि मुच्यतामयमिति । ततोर्द्धदण्डे प्राप्तेर्धदण्डोर्धदण्डे प्राप्ते ताडनं ता-डने प्राप्ते धिग्दण्ड इति कृत्वा तद्वशे विसृजेत् । एवमृत्विजि । ऋत्विगा-

चार्यौ राज्ञः स्वभूतौ न दण्ड्यस्य । स्नातको विद्यावृत्ताभ्याम् । राजानन्तरादिः । सर्वे एते राज्ञा मान्याः । अतस्ते दण्ड्यस्य त्राणं स्युरुक्तेन प्रकारेण रक्षका भवेयुः । नान्यः कश्चित् । तेष्यन्यत्र वध्यात् । यस्य वधानुगुणोपराधो न तस्याचार्यादयोपि त्राणम् । हन्तव्य एव स इति ॥

---

PAṬALA XI., KAṆḌIKÂ 28.

१. वैश्यो वैश्यवृत्तिर्वा कृष्यर्थं परक्षेत्रं परिगृह्य यद्युत्थानं यत्नं कृषिविषयं न कुर्यात् । तदभावाद्यदि फलं न स्यात्तत एतस्मिन्निमित्ते स कर्षकः समृद्धश्चेत्तस्मिन्भागे यत्फलं भावि तदपहार्योपहारयितव्यो राज्ञा क्षेत्रस्वामिनो दाप्यः ॥

२. कीनाशः कर्षकस्तस्यावशिनोस्वतन्त्रस्य निर्धनस्य दासस्य कर्मन्यासे स चेत्कर्म न्यसेद्विच्छिन्द्यात्तस्य दण्डेन ताडनं कर्तव्यं स दण्डेन ताडयितव्यः । अर्थाभावान्नार्थदण्डः । अपर आह । अवश्यवश्योर्विधेयः । यः क्षेत्रं परिगृह्यावशिनः कीनाशस्य कृषिकर्म न्यसेन्न स्वयं कुर्यात्तस्य परिग्राहको दण्डेन ताड्य इति । अथवावशिन इति बहुव्रीहिः । यस्य कीनाशस्य वशी स्वतन्त्रः क्षेत्रवान्नास्ति यदि पूर्वकृष्टस्य क्षेत्रस्य कृषिकर्म न्यसेन्न कुर्यात्तस्य ताडनं दण्ड इति राजपुरुषस्योपदेशः ॥

५. ये च पशवो व्रजे गोष्ठे निरुद्धास्तं व्रजं हित्वादिनः सस्यादेर्भक्षयितारो भवन्ति तान्कर्शयेद्बन्धनादिना कृशान्कुर्यात् । कः । यद्भक्षितं तद्वान्राजपुरुषो वा । नातिपातयेन्नातिनिरोधनं कुर्यान्नातिताडयेद्वा ॥

६. यदि पशुपः पशूनवरुध्य पालयितुं गृहीत्वा भयस्थानेषु विसृज्योपेक्षया मारयेन्नाशयेद्वा । नाशनं चोरादिभिरपहरणम् । तस्मिन्सति[1] स्वामिभ्यः पशूनवसृजेत्प्रत्यर्पयेत्पश्वभावे मूल्यम् ॥

७. ..................कः । यस्तत्र रक्षकत्वे राज्ञाधिकृतः ॥

८. पुनः प्रमादादुत्सृष्टेषु सकृदवरुध्य स्वामिभ्योवसृजेत् ॥

९. ततो द्वितीयात्प्रमादादूर्ध्वं ग्राममानीयेत्यादि यदुक्तं तत्र सूक्ष्मेन्नाद्रियेत । तस्मिन्विषय उपेक्षेत ॥

---

[1] G. U.[1] omits तस्मिन्सति.—

१९. तथाशब्दस्यं भोजनमित्यनेन संबन्धः । प्राणसंशयदशायामेधोदकादेरादाने कामकृतेप्यदण्ड्यः । तथा भोजनमप्याददानः प्राणसंशये न दण्ड्य इति ॥

---

PAṬALA XI., KAṆḌIKÂ 29.

२. तेषु प्रयोजकादिषु यो भूय आरभते यस्य व्यापारोर्थनिर्वृत्तावधिकमुपयुज्यते तस्मिन्फलविशेषो भवति ॥

३. कुटुम्बिनौ दंपती । तौ धनस्य परिग्रहे विनियोगे चेशाते । यद्यप्येवं तथापि भर्तुरनुज्ञया विनास्त्री न विनियोक्तुं प्रभवति । भर्ता तु प्रभवति । तदेतेन वेदितव्यं न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्तीति [ २,१४,१९ ] ॥

४. तयोरनुमतेनुमतौ सत्यामन्येपि पुत्रादयस्तद्धितेष्वैहिकेष्वामुष्मिकेषु च हितेषु वर्तेरन्द्रव्यविनियोगेनापि वा ॥

५. अर्थिप्रत्यर्थिनोर्विप्रतिपिद्धो वादो विवादः । तत्र विद्यादिगुणसंयुक्ता निर्णेतारः स्युरिति वाक्यशेषः । विद्याध्ययनसंपदध्ययनसहितं शास्त्रज्ञानम् । अभिजनः कुलशुद्धिः । वृद्धाः परिणतवयसः । मेधाविन ऊहापोहकुशलाः । धर्मेषु वर्णाश्रमप्रयुक्तेष्वविनिपातिनः । विनिपातः प्रमादः । तद्रहिताः ॥

६. ते च निर्णयन्तः संदेहस्थलेषु लिङ्गतोनुमानेन दैवेन तप्तमाषादिना । इतिशब्दः प्रकारे । यद्वान्यदेवंयुक्तं वचनव्याघातादि तेन च विचित्यार्थस्थितिमान्विष्य । निर्णेतारः स्युरित्यध्याहृतेन वाक्यसमाप्तिः ॥

७. अथ साक्ष्यविधिः ॥ पुण्याह इति ॥ पुण्याहो देवनक्षत्रम् । प्रातर्न मध्याह्नादिषु । अग्नाविद्धेग्निमिद्ध्वा तत्समीपे । अपामन्त उदककुम्भमुपनिधाय तत्समीपे । राजवति राजाधिष्ठिते सदसि । राजग्रहणं प्राड्विवाकादेरुपलक्षणम् । उभयत उभयोरपि पक्षयोः । सत्यवचनेन चासत्यवचनेन साक्षिणो यद्भावि फलं तत्सत्यं ब्रूहि । अनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि । अनृतमुक्त्वा महाघोरं नरकं प्रतिपत्स्यस इत्यादिना प्रकारेण समाख्याप्य प्राड्विवाकादिभिः पृष्ट इति शेषः । सर्वानुमतेर्थिप्रत्यर्थिनोः सभ्यानां

चानुमती सत्यां मुख्यः साक्षी गुणैरुपेतो दोषैश्च वर्जितः साक्षी प्रश्नं पृष्टमर्थं सत्यं यथात्मना ज्ञातं तथा ब्रूयात् ॥

१०. सत्य उक्ते स्वर्गो भवति । सर्वाणि च भूतान्येतं प्रशंसन्ति अपि देवाः ॥

११. स्त्रीषु शूद्रेषु च या विद्या सा निष्ठा समाप्तिः । तस्यामप्यधिगतायां विद्याकर्म परितिष्ठतीति ॥

१२. अथर्वणा प्रोक्तमधीत आथर्वणिकः । वसन्तादिभ्यष्ठक् [ पा० ४, २, ६३ ] तेषामाम्नाय आथर्वणः । आथर्वणिकस्येकलोपः । तस्य वेदस्य शेषोयं या विद्या स्त्रीषु शूद्रेषु चेत्युपदिशन्ति धर्मज्ञाः ॥

१३. अत्र समाम्नातं प्रतिपदं पाठः । तेन धर्मसमाप्तिः कृच्छ्राशक्या कर्तुं किंतु लक्षणकर्मणात्तु समाप्यते[1] येन सामान्येन भिन्नानामप्यधिगमो भवति तल्लक्षणं तस्य कर्मणा करणेन समाप्यत इति । कर्मणात्त्विति द्वितकारपाठश्छान्दसः । आदिति वा निपातस्य प्रश्लेषः । स च सद्य इत्यस्यार्थे द्रष्टव्यः ॥

१४. वक्ष्यत इति शेषः ॥ सर्वजनपदेष्वित्याद्यभिजयतीत्यन्तं गतम्[2] ।

१५. उक्तव्यतिरिक्ता ये धर्मास्ते धर्मशेषास्तान्स्त्र्यादीनामपि सकाशात्प्रतीयादित्येके मन्यन्ते । ते च प्रतिजनपदं प्रतिकुलं च भिन्नास्तथैव प्रत्येतव्याः । तत्र द्रविडाः कन्या मेषस्थे सवितर्यादित्यपूजामाचरन्ति भूमौ मण्डलमालिख्येत्यादीन्युदाहरणानि । द्विरुक्तिः प्रश्नपरिसमाप्त्यर्था[3] ॥

---

[1] G. U[1] omits the two first sentences.— [2] G. U[1] has only वक्ष्यते । गतम् ॥
[3] अध्ययनपरिसमाप्त्यर्था G. U[1].—

VERBAL INDEX TO THE DHARMA SUTRA

BY Dr. THEODOR BLOCH.

### आ.

## इ

### द

### प.

य

### श

# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of Dr. P. Peterson and Dr. R. G. Bhandarkar.*

| | Rs. | a. | p. |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. Bühler... | 0 | 4 | 0 |
| No. II.—Nâgojibhatta's Paribhâshenduśekhara. Edited and explained by Dr. Kielhorn. The Sanskrit Text and various Readings, Part I. ... | 0 | 8 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. Bühler... | 0 | 4 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. F. Kielhorn ... | 0 | 7 | 0 |
| No V.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part I., Cantos I.—VI. ... | 1 | 0 | 0 |
| No. VI.—Mâlavikâgnimitra, a Sanskrit Play by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. ... | 2 | 2 | 0 |
| No. VII.—Nâgojibhatta's Paribhâshenduśekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I.—XXXVII. ... | 0 | 8 | 0 |
| No. VIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part II., Cantos VII.—XIII. | 0 | 12 | 0 |
| No. IX.—Nâgojibhatta's Paribhâshenduśekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs XXXVIII.—LXIX ... | 0 | 8 | 0 |
| No. X.—The Daśakumâracharita of Daṇḍin. Part I. Edited, with Critical and Explanatory Notes, by Dr. Bühler... | 0 | 8 | 0 |
| No. XI.—The Nîtiśataka and Vairâgyaśataka of Bhartṛihari, with extracts from two Sanskrit Commentaries. Edited, with Notes, by Kâshinâth Trimbak Telang, M.A. (Copies not available.) | | | |
| No. XII.—Nâgojibhatta's Paribhâshenduśekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs LXX.—CXXII. ... | 0 | 8 | 0 |
| No. XIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part III., Cantos XIV.—XIX. | 0 | 8 | 0 |
| No. XIV.—Vikramâṅkadeva-Charita. Life of King Vikramâditya Tribhuvanamalla of Kalyâṇa, composed by his Vidyâpati Bilhaṇa. Edited, with an Introduction, by Dr. G. Bühler (Copies not available.) | | | |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XV.—Mâlatî-Mâdhava: a Drama by Bhavabhûti. Edited, with Critical and Explanatory Notes, by Dr. R. G. Bhandarkar, M.A. (Second Edition in the Press.) | | | |
| No. XVI.—Vikramorvasî: a Drama by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. ... ... | 1 | 4 | 0 |
| No. XVII.—Hemachandra's Deśînâmamâlâ. Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R. Pischel and Dr. G. Bühler. Part I. Text and Critical Notes by Professor Pischel | 1 | 0 | 0 |
| No. XVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. I. complete. Parts I. II. and III. ... ... | 9 | 0 | 0 |
| No. XIX. Ditto ditto by ditto. Vol. I. Part II. | 1 | 0 | 0 |
| No. XX. Ditto ditto by ditto. Vol. I. Part III. | 1 | 0 | 0 |
| No. XXI. Ditto ditto by ditto. Vol II. Part I. | 1 | 0 | 0 |
| No. XXII. Ditto ditto by ditto. Vol. II. Part II. | 1 | 0 | 0 |
| No. XXIII. Vâsishṭhadharmaśâstram. Edited, with Notes, by Dr. A. A. Fuhrer .. ... ... ... .. ... | 0 | 8 | |
| No. XXIV.—Kâdambarî by Bâṇa and his son. Vol. I. Sanskrit Text, complete. Edited by Dr. P. Peterson. (Copies not available). | | | |
| Do. Vol. II. Introduction and Notes, by do. ... | 2 | 0 | 0 |
| No. XXV.—Kîrti-Kaumudî. Edited, with Notes, by Prof. A. V. Kathavate (Copies not available) ... | | | |
| No. XXVI.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. II. Part III. ... | 1 | 0 | 0 |
| No. XXVII.—Mudrârâkshasa, by Viśâkhadatta, with the Commentary of Dhuṇḍhirâja. Edited, with Notes, by K. T. Telang (Copies not available.) | | | |
| No. XXVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. III. Part I. ... | 1 | 0 | 0 |
| No. XXIX.—Do. Do. of Do. by Do. Vol. III. Part II. | 1 | 0 | 0 |
| No. XXX.—Ditto do. of do. by do. Vol. III. Part III. | 1 | 0 | 0 |
| No. XXXI.—Subhâshitâvali of Vallabhadeva. Edited by Dr. P. Peterson and Pandit Durgaprasad ... | 2 | 8 | 0 |
| No. XXXII.—Tarka-Kaumudî of Laugâkshi Bhâskara. Edited by Professor M. N. Dvivedi ... ... ... | 0 | 12 | 0 |
| No. XXXIII.—Hitopadeśa of Nârâyaṇa. Edited by Dr. P. Peterson... ... ... ... ... ... ... ... | 0 | 14 | 0 |
| No. XXXIV.—The Gaudavaho, by Vâkpati. Edited by Shankar P. Pandit ... .. ... ... ... ... ... | 3 | 0 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XXXV.—Mahânârâyaṇa Upanishad. Edited by Colonel G. A. Jacob ... ... ... ... ... ... ... ... | 0 | 7 | 0 |
| No. XXXVI.—University Selections of Hymns from the Rigveda. Edited by Dr. P. Peterson ... ... ... | 4 | 0 | 0 |
| No. XXXVII.—Śârṅgadharapaddhati. Edited by Dr. P. Peterson. Vol. I.... ... ... ... ... ... ... | 3 | 0 | 0 |
| No. XXXVIII.—Naishakarmyasiddhi. Edited by Col. G. A. Jacob ... ... ... ... ... ... ... ... | 2 | 0 | 0 |
| No. XXXIX.—A Concordance to the principal Upanishads and Bhagvadgîtâ, by the same author ... ... | 8 | 0 | 0 |
| No. XL.—Eleven Atharvaṇa Upanishads, with Dîpîkâs, by the same author ... ... ... ... ... ... ... | 2 | 8 | 0 |
| No. XLI.—Handbook to the Study of the Ṛigveda, by Dr. P. Peterson. Part I. ... ... ... ... ... | 3 | 0 | 0 |
| No. XLII.—The Daśakumaracharita of Daṇḍin. Part II (completing Dr. Buhler's Edition). Edited with Critical and Explanatory Notes by Dr. P. Peterson | 0 | 8 | 0 |
| No. XLIII.—Handbook to the Study of the Rigveda, by Dr. P. Peterson. Part II. comprising the Seventh Maṇḍala with the Commentary of Sâyana... | 5 | 0 | 0 |
| No. XLIV.—Aphorisms of the Sacred Law of the Hindus, an Index of the Sutras and the various Readings of the Hiraṇyakeshi-Dharmasutra, by Dr. G. Bühler. Part I. ... ... .. ... ... ... ... | 2 | 12 | 0 |
| No. XLV.—Rajatarangini. Edited by Pandit Durgaprasad, Part I. containing the first 7 (seven) Tarangas ... ... . . ... ... ... . ... .. | 3 | 0 | 0 |
| No. XLVI.—Patanjali's Yogasutras. Edited with the Scholium of Vyâsa and the Commentary of Vachaspati, by Rajaram Shastri Bodas .. ... ... ... ... | 3 | 4 | 0 |
| No. XLVII.—Pârâśara Dharma Samhitâ with the Commentary of Sâyana Mâdhavâcharya, Vol. I., Part I. Edited by Pandit Vaman Shastri Islâmpurkar ... | 4 | 4 | 0 |
| No. XLVIII.—Ditto do. of do. by do. Vol. I Part II. ... | 4 | 4 | 0 |
| No. XLIX.—Nyâyokos'a. 2nd Edition. Edited by Mahâmahopâdhyâya Bhîmâchârya Zalkîkar ... ... .. | 12 | 0 | 0 |
| No. L.—Âpastamba Dharmasûtra, Part II. Edited by Dr. G. Bühler ... ... ... ... .. ... .. ... | 2 | 4 | 0 |
| No. LI.—Râjataraṅgiṇî of Kalhaṇa. Edited by Pandit Durgaprasad, Vol. II, Taronga VIII ... ... ... | 2 | 8 | 0 |